॥ गरुडोपनिषत् ॥

विषं ब्रह्मातिरिक्तं स्यादमृतं ब्रह्ममात्रकम् ।
ब्रह्मातिरिक्तं विषवद्ब्रह्ममात्रं खगेडहम् ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः ॥ भद्रं पश्येमाक्षभिर्यजत्राः ॥

स्थिरैरङ्गैस्तुष्टुवा□सस्तनूभिः ॥ व्यशेम देवहितं यदायुः ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः ॥ स्वस्ति नः पूषा विश्ववेदाः ॥

स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः ॥ स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ ॥ गारुडब्रह्मविद्यां प्रवक्ष्यामि यां ब्रह्मा विद्यां
नारदाय प्रोवाच नारदो बृहत्सेनाय बृहत्सेन इन्द्राय इन्द्रो
भरद्वाजाय भरद्वाजो जीवत्कामेभ्यः शिष्येभ्यः प्रायच्छत् ।
अस्याः श्रीमहागरुडब्रह्मविद्याया ब्रह्मा ऋषिः । गायत्री छन्दः ।
श्रीभगवान्महागरुडो देवता । श्रीमहागरुडप्रीत्यर्थे मम
सकलविषविनाशनार्थे जपे विनियोगः । ॐ नमो भगवते
अङ्गुष्ठाभ्यां नमः । श्री महागरुडाय तर्जनीभ्यां स्वाहा ।
पक्षीन्द्राय मध्यमाभ्यां वषट् । श्रीविष्णुवल्लभाय
अनामिकाभ्यां हुम् । त्रैलोक्य परिपूजिताय कनिष्ठिकाभ्यां वौषट् ।
उग्रभयङ्करकालानलरूपाय करतलकरपृष्ठाभ्यां फट् ।
एवं हृदयादिन्यासः । भूर्भुवः सुवरोमिति दिग्बन्धः । ध्यानम् ।
स्वस्तिको दक्षिणं पादं वामपादं तु कुञ्चितम् ।
प्राञ्जलीकृतदोर्युग्मं गरुडं हरिवल्लभम् ॥ १॥

अनन्तो वामकटको यज्ञसूत्रं तु वासुकिः ।
तक्षकाः कटिसूत्रं तु हारः कार्कोट उच्यते ॥ २॥

पद्मो दक्षिणकर्णे तु महापद्मस्तु वामके ।
शङ्खः शिरःप्रदेशे तु गुलिकस्तु भुजान्तरे ॥ ३॥

पौण्ड्रकालिकनागाभ्यां चामराभ्यां स्वीजितम् ।
एलापुत्रकनागाद्यैः सेव्यमानं मुदान्वितम् ॥ ४॥

कपिलाक्षं गरुत्मन्तं सुवर्णसदृशप्रभम् ।
दीर्घबाहुं बृहत्स्कन्धं नादाभरणभूषितम् ॥ ५॥

आजानुतः सुवर्णाभमाकट्योस्तुहिनप्रभम् ।
कुङ्कुमारुणमाकण्ठं शतचन्द्र निभाननम् ॥ ६॥

नीलाग्रनासिकावक्त्रं सुमहच्चारुकुण्डलम् ।
दंष्ट्राकरालवदनं किरीटमुकुटोज्ज्वलम् ॥ ७॥

कुङ्कुमारुणसर्वाङ्गं कुन्देन्दुधवलाननम् ।
विष्णुवाह नमस्तुभ्यं क्षेमं कुरु सदा मम ॥ ८॥

एवं ध्यायेत्त्रिसन्ध्यासु गरुडं नागभूषणम् ।
विषं नाशयते शीघ्रं तूलरशिमिवानलः ॥ ९॥

ओमीमों नमो भगवते श्रीमहागरुडाय पक्षीन्द्राय
विष्णुवल्लभाय त्रैलोक्यपरिपूजिताय उग्रभयंकरकालानलरूपाय
वज्रनखाय वज्रतुण्डाय वज्रदन्ताय वज्रदंष्ट्राय
वज्रपुच्छाय वज्रपक्षालक्षितशरीराय ओमीकेह्येहि
श्रीमहागरुडाप्रतिशासनास्मिन्नाविशाविश दुष्टानां

विषं दूषयदूषय स्पृष्टानां नाशयनाशय
दन्दशूकानां विषं दारयदारय प्रलीनं विषं
प्रणाशयप्रणाशय सर्वविषं नाशयनाशय हनहन
दहदह पचपच भस्मीकुरुभस्मीकुरु हुं फट् स्वाहा ॥

चन्द्रमण्डलसंकाश सूर्यमण्डलमुष्टिक ।
पृथ्वीमण्डलमुद्राङ्ग श्रीमहागरुडाय विषं
हरहर हुं फट् स्वाहा ॥ ॐ क्षिप स्वाहा ॥ ओमीं
सचरति सचरति तत्कारी मत्कारी विषाणां च विषरूपिणी
विषदूषिणी विषशोषणी विषनाशिनी विषहारिणी
हतं विषं नष्टं विषमन्तःप्रलीनं विषं प्रनष्टं
विषं हतं ते ब्रह्मणा विषं हतमिन्द्रस्य वज्रेण स्वाहा ॥

ॐ नमो भगवते महागरुडाय विष्णुवाहनाय
त्रैलोक्यपरिपूजिताय वज्रनखवज्रतुण्डाय वज्रपक्षालंकृत-
शरीराय एह्येहि महागरुड विषं छिन्धिच्छिन्धि
आवेशयावेशय हुं फट् स्वाहा ॥

सुपर्णोऽसि गरुत्मात्त्रिवृत्ते शिरो गायत्रं चक्षुः स्तोम आत्मा
साम ते तनूर्वमदेव्यं बृहद्रथन्तरे पक्षौ यज्ञायज्ञियं
पुच्छं छन्दांस्यङ्गानि धिष्णिया शफा यजूंशि नाम ॥

सुपर्णोऽसि गरुत्मान्दिवं गच्छ सुवः पत ओमीं ब्रह्मविद्या-
ममावास्यायां पौर्णमास्यां पुरोवाच सचरति सचरति
तत्कारी मत्कारी विषनाशिनी विषदूषिणी विषहारिणी हतं
विषं नष्टं विषं प्रनष्टं विषं हतमिन्द्रस्य वज्रेण स्वाहा ॥

तस्र्यम् । यद्यनन्तकदूतोऽसि यदि वानन्तकः स्वयं सचरति सचरति
तत्कारी मत्कारी विषनाशिनी विषदूषिणी हतं विषं नष्टं

विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य
वज्रेण स्वाहा ।
यदि वासुकिदूतोऽसि यदि वा वासुकिः स्वयं सचरति सचरति
तत्कारी मत्कारी विषनाशिनी विषदूषिणी हतं विषं
नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा
विषमिन्द्रस्य वज्रेण स्वाहा यदि वा तक्षकः स्वयं सचरति
सचरति तत्कारी मत्कारी विषनाशिनी विषदूषिणी हतं विषं
नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ब्रह्मणा
विषमिन्द्रस्य वज्रेण स्वाहा ॥

यदि कर्कोटकदूतोऽसि यदि वा कर्कोटकः स्वयं सचरति सचरति
तत्कारी मत्कारी विषनाशिनी विषदूषिणी हतं विषं नष्टं विषं
हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥

यदि पद्मकदूतोऽसि यदि वा पद्मकः स्वयं सचरति सचरति
तत्कारी मत्कारी विषनाशिनी विषदूषिणी हतं विषं
नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा
विषमिन्द्रस्य वज्रेण स्वाहा ॥

यदि महापद्मकदूतोऽसि यदि वा महापद्मकः स्वयं
सचरति सचरति तत्कारी मत्कारी विषनाशिनी विषदूषिणी हतं
विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा
विषमिन्द्रस्य वज्रेण स्वाहा ॥

यदि शङ्खकदूतोऽसि यदि वा शङ्खकः स्वयं
सचरति सचरति तत्कारी मत्कारी विषनाशिनी विषदूषिणी
हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं
हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥

यदि गुलिकदूतोऽसि यदि वा गुलिकः स्वयं सचरति सचरति
तत्कारी मत्कारी विषनाशिनी विषदूषिणी विषहारिणी
हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं
हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥

यदि पौण्ड्रकालिकदूतोऽसि यदि वा पौण्ड्रकालिकः स्वयं
सचरति सचरति तत्कारी मत्कारी विषनाशिनी विषदूषिणी
विषहारिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण
विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥

यदि नागकदूतोऽसि यदि वा नागकः स्वयं सचरति सचरति
तत्कारी मत्कारी विषनाशिनी विषदूषिणी विषहारिणी हतं
विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते
ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥

यदि लूतानां प्रलूतानां यदि वृश्चिकानां यदि घोटकानां
यदि स्थावरजङ्गमानां सचरति सचरति तत्कारी मत्कारी
विषनाशिनी विषदूषिणी विषहारिणी हतं विषं नष्टं
विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य
वज्रेण स्वाहा । अनन्तवासुकितक्षककर्कोटकपद्मकमहापद्मक-
शङ्खकगुलिकपौण्ड्रकालिकनागक इत्येषां दिव्यानां
महानागानां महानागादिरूपाणां विषतुण्डानां विषदन्तानां
विषदंष्ट्राणां विषाङ्गानां विषपुच्छानां विश्वचाराणां
वृश्चिकानां लूतानां प्रलूतानां मूषिकाणां गृहगौलिकानां
गृहगोधिकानां घ्रणासानां गृहगिरिगह्वरकालानलवल्मीकोद्भूतानां
तार्णानां पार्णानां काष्ठदारुवृक्षकोटरस्थानां
मूलत्वग्दारुनिर्यासपत्रपुष्पफलोद्भूतानां दुष्टकीटकपिश्वान-
मार्जारजंबुकव्याघ्रवराहाणां जरायुजाण्डजोद्भिज्जस्वेदजानां
शस्त्रबाणक्षतस्फोटव्रणमहाव्रणकृतानां कृत्रिमाणामन्येषां

भूतवेतालकूष्माण्डपिशाचप्रेतराक्षसयक्षभयप्रदानां
विषतुण्डदंष्ट्रानां विषाङ्गानां विषपुच्छानां विषाणां
विषरूपिणी विषदूषिणी विषशोषिणी विषनाशिनी विषहारिणी
हतं विषं नष्टं विषमन्तःप्रलीनं विषं प्रनष्टं विषं हतं ते
ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा । य इमां ब्रह्मविद्याममावास्यायां
पठेच्छृणुयाद्वा यावज्जीवं न हिंसन्ति सर्पाः । अष्टौ ब्राह्मणान्ग्राहयित्वा
तृणेन मोचयेत् । शतं ब्राह्मणान्ग्राहयित्वा चक्षुषा मोचयेत् ।
सहस्रं ब्राह्मणान्ग्राहयित्वा मनसा मोचयेत् । सर्पाञ्जले न मुञ्चन्ति ।
तृणे न मुञ्चन्ति । काष्ठे न मुञ्चन्तीत्याह भगवान्ब्रह्मेत्युपनिषत् ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः ॥ भद्रं पश्येमाक्षभिर्यजत्राः ॥

स्थिरैरङ्गैस्तुष्टुवा□सस्तनूभिः ॥ व्यशेम देवहितं यदायुः ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः ॥ स्वस्ति नः पूषा विश्ववेदाः ॥

स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमिः ॥ स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ हरिः ॐ तत्सत् ॥

इति श्रीगारुडोपनिषत्समाप्ता ॥